श्रीः

श्रीमते निगमान्तमहादेशिकाय नमः
श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी।
वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि॥

श्रीशङ्कराचार्य विरचितं

# ॥ श्रीहरिशरणाष्टकम् ॥

*This document* has been prepared by*

***Sunder Kidambi***

*with the blessings of*

श्री रङ्गरामानुज महादेशिकन्

**His Holiness *śrīmad āṇḍavan* of *śrīraṅgam***

*This was typeset using LaTeX and the **skt** font.

श्रीः

# ॥ श्रीहरिशरणाष्टकम् ॥

ध्येयं वदन्ति शिवमेव हि केचिदन्ये
शक्तिं गणेशमपरे तु दिवाकरं वै।
रूपैस्तु तैरपि विभासि यतस्त्वमेव
तस्मात् त्वमेव शरणं मम शङ्खपाणे॥ १॥

नो सोदरो न जनको जननी न जाया
नैवात्मजो न च कुलं विपुलं बलं वा।
सन्दृश्यते न किल कोऽपि सहायको मे
तस्मात् त्वमेव शरणं मम शङ्खपाणे॥ २॥

नोपासिता मदमपास्य मया महान्त-
स्तीर्थानि चास्तिकधिया न हि सेवितानि।
देवार्चनं च विधिवन्न कृतं कदापि
तस्मात् त्वमेव शरणं मम शङ्खपाणे॥ ३॥

दुर्वासना मम सदा परिकर्षयन्ति
चित्तं शरीरमपि रोगगणा दहन्ति।
सञ्जीवनं च परहस्तगतं सदैव
तस्मात् त्वमेव शरणं मम शङ्खपाणे॥ ४॥

पूर्वं कृतानि दुरितानि मया तु यानि
स्मृत्वाऽखिलानि हृदयं परिकंपते मे।
ख्याता च ते पतितपावनता तु यस्मात्
तस्मात् त्वमेव शरणं मम शङ्खपाणे॥ ५॥

दुःखं जराजननजं विविधाश्च रोगाः
काकश्वसूकरजनिर्निरये च पातः।
ते विस्मृतेः फलमिदं विततं हि लोके
तस्मात् त्वमेव शरणं मम शङ्खपाणे॥ ६॥

नीचोऽपि पापवलितोऽपि विनिन्दितोऽपि
    ब्रूयात् तवाहमिति यस्तु किलैकवारम्।
तं यच्छसीश निजलोकमिति व्रतं ते
    तस्मात् त्वमेव शरणं मम शङ्खपाणे॥ ७ ॥

वेदेषु धर्मवचनेषु तथागमेषु
    रामायणेऽपि च पुराणकदंबके वा।
सर्वत्र सर्वविधिना गदितस्त्वमेव
    तस्मात् त्वमेव शरणं मम शङ्खपाणे॥ ८ ॥

॥ इति श्रीहरिशरणाष्टकम् समाप्तम् ॥